अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेदथापि वा ॥ ५४
निमन्त्रयेत सान्त्वेन संमानेन तितिक्षया ।
आशाकारणमित्येतत्कर्तव्यं भूतिमिच्छता ॥ ५५
न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत् ।
अपार्थकमनायुष्यं गोविषाणस्य भक्षणम् ।
दन्ताश्च परिघृष्यन्ते रसश्चापि न लभ्यते ॥ ५६
त्रिवर्गे त्रिविधा पीडानुबन्धास्त्रय एव च ।
अनुबन्धवधौ ज्ञात्वा पीडां हि परिवर्जयेत् ॥ ५७
ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनर्विवर्धेत स्वल्पोऽप्यनिवारितः ॥ ५८
वर्धमानमृणं तिष्ठत्परिभूताश्च शत्रवः ।
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥ ५९

C. 12. 5306
B. 12. 140. 59
K. 12. 140. 59

— M1-3 om. (hapl.) 53$^{cd}$. —$^{d}$) K1. 2. 4 D1 निर्व्यूहय्; D4 T2 विप्र° (for निप्र°). D7 T G1. 2. 5 M4 transp. यत्नेन and कर्तव्यो. D4 कर्तव्यं. D7 T G1. 2. 5 M4 हितम् (for भूतिम्).

54 =(var.) *ibid.*, lines 113-114: 12. 103. 34. D4 repeats 54$^{a}$ after 55. —$^{a}$) Da2 प्रहरिष्यत्. —$^{b}$) K5 B2 Da Dn1. n3 D2. 3. 8 प्रहत्यैव; V1 Bo. 3-5 D5 प्रकृत्यापि; B1 प्रकृत्यैव; D1 प्रहस्यापि; G1 प्रहृष्यापि; M1 प्रहृष्य च; M3 °स्य च (for °त्यापि). M2 प्रहरन्नपि भारत. —$^{c}$) K5 V1 B1. 2 Da1 Dn1. n3 D2. 3. 8 असिनापि; Bo. 5 अपि वास्य; Da2 अपि नापि; D5 अपि चापि (for अपि चास्य). D9 शिराम् (sic); M4 lacuna. —$^{d}$) K2 दुष्याच्; B4 रुद्येच्; D5 तुष्याच् (for रुद्याच्). D5 यच्छेद् (for शोचेद्). K4 यथापि (for अ°). K3 शोचेव च तुद्देत च (corrupt); K5 V1 B1. 2 Da Dn1. n3 D2-4. 7-9 S (G3. 4 absent) शोचेत च रुदेत च.

55 $^{a}$) K3 Dn1 D4 न मंत्रयीत; K5 V1 B Dn3 D2. 3. 5. 8. 9 निमंत्रयीत; Da मंत्रयेत च. V1 B2 शांत्वेन. T2 सुनिमंत्रेण सांत्वेन. —$^{b}$) D4. 9 सन्मानेन; M2 सर्वानेव (for संमानेन). D5 तितिक्षता; G1 तितीक्षया. —$^{c}$) =(var.) *ibid.*, line 136. Da आशां (for आशा-). K2 B3. 4 D5. 7 S (except G1 M2; G3. 4 absent) -करणम् (for -का°). K3. 5 Dn1. n3 D2. 3. 8. 9 लोकाराधनमित्येतत्. — After 55, D4 repeats 54$^{a}$.

56 $^{a}$) K1 शुष्कराव (for °वैरं). —$^{b}$) K2. 4. 5 V1 B1. 2. 4 Da Dn1. n3 D2. 3. 8 transp. न and बाहुभ्यां. —$^{c}$) K3 D4. 9 अस्वार्थकम्; K5 V1 B1. 2 Da Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) अन° (for अपा°). —$^{d}$) D1 लक्षणं (for भ°). —$^{e}$) K1. 2 परिदृश्यंते; K3. 5 Dn1. n3 D2. 3. 8 °मृज्यंते; D4 °पिष्यंत; D7 T1 G1. 2. 5 M1-3 °मृद्यंते; T2 °मृष्यति; M4 °दृश्यंते (for °घृष्यन्ते). —$^{f}$) Da विद्यते (for लभ्यते).

57 =(var.) *ibid.*, lines 139-140. —$^{a}$) Ś1 K1 D1 त्रिवर्गं; K2. 4. 5 Dn1. n3 D2. 3. 8 °र्गस् (for °र्गे). ❀ Cn: त्रिविधा पीडा । धर्मेणार्थस्य पीडा, अर्थेन धर्मस्य, कामेन तयोरिति । Cv: अनार्जनम्, अर्जितस्य अरक्षणम्, रक्षितस्यान्ते विनाशनम् इति त्रिविधा पीडा । ❀ —$^{b}$) D7 S (except T2; G3. 4 absent) ह्यनुबंधस् (M °धास्). K5 V1 B1. 2 Da Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) तथैव (for त्रय एव). ❀ Cn: अनुबन्धाः फलानि। धर्मस्यार्थोऽर्थस्य कामः कामस्येन्द्रियप्रीतिरिति क्षुद्राः । धर्मस्य चित्तशुद्धिरर्थस्य यज्ञः कामस्य जीवनमात्रमिति प्राज्ञाः । ❀ —M2 om. 57$^{c}$-58$^{b}$. —$^{c}$) K2. 5 B4 Dn1. n3 D2-4. 8. 9 T1 G5 अनुबंधं तथा ज्ञात्वा; K3 V1 Bo-3. 5 Da D5 °बंधानथो ज्ञात्वा; D7 T2 G1. 2. 5 M1. 3. 4 °बंधां(D7 G1 °ध-; T2 °धा-; G2 °धं)स्तथा पीडा. —$^{d}$) K1. 3 V1 B1-5 Da D5 वि-; K5 Da Dn1. n3 D2. 3. 8 च; Bo lacuna; D4 तु (for हि). D7 S (M2 om.; G3. 4 absent) ज्ञात्वा विद्वान्वशं नयेत्.

58 =(var.) Pañcatantra 3. 178. M2 om. 58$^{ab}$ (cf. v. l. 57). —$^{a}$) K2 ऋणशेषम्. K1. 3. 5 V1 B D (except D1; Dn2 D6 absent) S (M2 om.; G3. 4 absent) ऋणशेषम्(T2 G2 °षं चा)ग्निशेषं च (hypermetric). —$^{b}$) All MSS. (except Ś1 K2. 4 D1; M2 om.; Dn2 D6 G3. 4 absent) शत्रुशेषं (for °शेषस्). —$^{c}$) K3. 5 Bo. 1. 3-5 Dn1. n3 D1-3. 5. 7. 8 T1 G1. 2. 5 M प्रवर्धते (D1 °त); V1 B3 Da विवर्धते; D9 प्रवर्तते; T2 प्रवर्धेत (for वि°). —$^{d}$) Submetric. K2. 4 हि (for ऽपि). K1 स्वल्पमप्यनिवारितं; K3. 5 V1 B Da Dn1. n3 D2-5. 7-9 S (G3. 4 absent) तस्माच्छेषं न कार(K5 Dn1. n3 D2-5. 8. 9 धार-; T2 M1. 3 शेष-; M2 संधा)-येत्; D1 स्वल्पोपि दानि न धारयेत् (corrupt).

59 Da om. 59$^{a}$-60$^{b}$. —$^{a}$) Ś1 D1 वर्धमाणम्. K1. 2. 4. 5 V1 Bo. 2-5 Dn1. n3 D2-5. 8. 9 तिष्ठेत्; B1 तिष्ठन् (for °त्). D7 T1 G1. 2. 5 M1. 3 ऋणशेषा विवर्धंते (M1. 3 °ति); T2 धनशेषाश्च वर्धते; M2. 4 धनशेषं (M4 °षा) विवर्धति. —$^{c}$) K1 [अ]नयेत्; D4 भयं; M2 [अ]नलम् (for °यं). K2. 3 (*sup. lin.* as in text). 5

C. 12. 5207
B. 12. 140. 60
K. 12. 140. 60

नासम्यकृतकारी स्यादप्रमत्तः सदा भवेत् ।
कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ६०

वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
आकराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ६१

गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजंगचरितं चरेत् ॥ ६२

श्रेणिमुख्योपजापेषु वल्लभानुनयेषु च ।
अमात्यान्परिरक्षेत भेदसंघातयोरपि ॥ ६३

मृदुरित्यवमन्यन्ते तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले च तीक्ष्णः स्यान्मृदुकाले मृदुर्भवेत् ॥ ६४

मृदुना सुमृदुं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरं मृदु ॥ ६५

काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रूंश्चैवाधितिष्ठति ॥ ६६

पण्डितेन विरुद्धः सन्दूरेऽस्मीति न विश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ६७

---

Dn1. n3 D2. 3. 8 जनयंति भयं तीव्रं; B1 damaged; D5 corrupt. —d) D4 चोप- (for चापि). T2 व्याधयोपेक्षिता इव.

60 =(var.) Ādi App. I (No. 81), lines 18–19. Da om. 60ab (cf. v.l. 59). —a) K4 D1 न सम्यक्; D4 नासत्यः; D5 नासाध्य- (for °सम्यक्). D7 T G5 कृत्यकारी; G1 [अ]नर्थं° (for कृत°). —b) D4 [अ]भवत् (for भवेत्). —c) K1 V1 B0–3. 5 Da D4 7 T1 G1. 2. 5 M1. 3. 4 ह्यपि (G1 °वि-) (for ऽपि हि). D5 सुच्छिन्नो. T2 M2 कंटको हि दुराच्छिन्नो. —d) B0. 3–5 चिरात् (for चिरम्).

61 b) K5 Da1 हर्षणेन (for दूषणेन). G2 मार्गाणां चापि दूषणं. —c) K2. 4 G1 M2 आकाराणां; K5 V1 B Da Dn1. n3 D2. 3. 5. 7. 8 T G5 अगा(B2 Dn1 आगा)राणां (for आक°).

62 a) K1 बकालीवा; D4 बकाकीरश्; D8. 9 वृकालीनः; M2 बकाधीनः (for °लीनः). G1 गृध्रदृष्टिबकलीनश्च (sic). —b) B4 damaged. D4 चावेष्टः; D5 सुचेष्टः; G1 निश्चेष्टः (for श्वचेष्टः). —d) G1 M2 -चरितम् (for -चरितं). ❀ Cv: भुजंगचरितम्, अकस्मात्परकृते दुर्गादौ प्रवेशनम् । ❀ —After 62, K3. 5 V1 B Da Dn1. n3 D2. 3. 5. 8 ins.:

347* शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् ।
लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ।

[(L. 1) V1 पातयेत् (for भेद°). —(L. 2) B0. 3–5 तुल्येषु (for °न). K3 समानेनैव विग्रहः (for the post. half).]

63 a) K1. 3. 5 B1. 2 Dn1. n3 D2–5. 7–9 S (G3. 4 absent) श्रेणी- (G1 श्रोणी-) (for श्रेणि-). B0. 3. 5 D4. 5 -जापेन; B4 -जानेन; Dn1 -जायेषु; Dn3 Cn -जापेषु; D2. 3. 8 -जालेषु (for -जापेषु). —b) Ś1 K1 D1. 4. 9 G2 वल्लवानु-; T2 दुर्लभानु-; G1 बलवानु- (for वल्लभानु-). B3 Da D5 -नयेन (for -नयेषु). —c) M3 अमात्यात्परिरक्षेत. —d) D9 भेदः (for भेद-). B1 -संहतयोर्; D5 -संपात° (for -संघात°).

64 With 64, cf. 12. 54. 21, 40; 103. 33; 104. 33. D5 om. (hapl.) 64. —a) D8 मृत्युर् (for मृदुर्). K3 V1 B1 Dn1. n3 D2. 3. 7. 8 S (G3. 4 absent) -जानंति (for -मन्यन्ते). K5 मृदुवत्परिजानंति. —b) K4 D4 सं (for च). —c) K3 D9 तु (for च). K5 Dn1. n3 D2. 3. 8 भवेत्तीक्ष्णो (for च तीक्ष्णः स्यान्). —d) Da1 भवन्; D1 तथा (for भवेत्).

65 =(var.) 3. 29. 30. —a) K5 V1 B Da Dn1. n3 D2. 3. 5. 8 [ए]व; D4 च; D7 S (G3. 4 absent) हि (for सु-). K5 Dn1. n3 D2. 3. 8 छिंधि (for हन्ति). —b) D1 मृदु च (for मृदुना). ❀ Cv: मृदुना आम्ररसेन मृदुं क्षीरं हन्ति । मृदुना खड्गधाराश्रिततोयेन दारुणं गजमस्तकं हन्ति । ❀ —c) K1 V1 B2 D4. 9 मृदुनः; K3 °नं (for °ना). —d) K2. 3. 5 V1 B Da Dn1. n3 D2–5. 7–9 T1 G1. 2. 5 तस्मात्तीक्ष्णतरो मृदुः.

66 =(var.) 3. 29. 23. —a) D1 कीर्णे (for काले). K3 D4 मृदुः काले भवति यः. —b) G1 दारुणं. —c) K2. 5 Dn1. n3 D2. 3. 8 प्र- (for स). —d) K2. 5 V1 B2 Da Dn1. n3 D2. 3. 8 शत्रुं चापि; K4 B3 D5 शत्रुं चैव; B1 स तस्यापि (for शत्रूंश्चैव). M2 [अ]तितिष्ठति.

67 a) D7 S (G3. 4 absent) तु (for सन्). —b) K3. 5 V1 B D (except D1. 5; Dn2 D6 absent) S (G3. 4 absent) दूरस्थोस्मी(D9 °स्मी)ति नाश्वसेत्. —c) K1. 3 D9 M1–3 दीर्घो. K3 D4. 3 G1 M2 बुद्धिमतौ (D3 °ते; M2 °तां). —d) D5 ताभ्यां. T2 M2 हिंसंति. B0 हिंसकः.

न तत्तरेद्यस्य न पारमुत्तरे-
न्न तद्धरेद्यत्पुनराहरेत्परः ।
न तत्खनेद्यस्य न मूलमुत्खने-
न्न तं हन्याद्यस्य शिरो न पातयेत् ॥ ६८
इतीदमुक्तं वृजिनाभिसंहितं
न चैतदेवं पुरुषः समाचरेत् ।
परप्रयुक्तं तु कथं निशामये-
दतो मयोक्तं भवतो हितार्थिना ॥ ६९
यथावदुक्तं वचनं हितं तदा
निशम्य विप्रेण सुवीरराष्ट्रियः ।
तथाकरोद्वाक्यमदीनचेतनः
श्रियं च दीप्तां बुभुजे सबान्धवः ॥ ७०

इति श्रीमहाभारते शान्तिपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

# १३९

युधिष्ठिर उवाच ।
हीने परमके धर्मे सर्वलोकातिलङ्घिनि ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ १
मर्यादासु प्रभिन्नासु क्षुभिते धर्मनिश्चये । C. 12. 5320 B. 12. 141. 2 K. 12. 141. 2

---

68 [a]) B1.2 तं; M2 तां (for तत्). B1 भवेद्यस्य; G1.2 हरेत्तस्य (G1 °द्यस्य). D5 om. (hapl.) from स्य up to द्य (in 68[b]). D4 M2 उत्तरन्; G2 उद्धरेन्. — [b]) D9 आहरते; T2 वाहरेत् (for आह°). B1 न तद्धदेस्त्वम्रमहरेत्परः. — [c]) D5 तं (for तत्). M2 हनेद् (for ख°). G1 om. (hapl.) from the second न up to द्यस्य (in 68[d]). K2.3.5 V1 B D (except D1; Dn2 D6 absent) T1 G2.5 M उद्धरेन् (K3 D4 °रन्) (for उत्खनेन्). — [d]) K3 D4.9 हन्याद्य सं (by transp.); B1 D7 T1 G2.5 न तं हरेद्; T2 M न तं हनेद्. K2.3 पालयेत्; T2 स्नात° (for पात°).

69 [a]) K5 B2 Dn3 D2.3 -संज्ञितं; T2 -संवृतं (for -संहितं). K1 इतीव मुक्तं वृजिनातिसंहितं; Ca as in text. — [b]) K3 D4 चैतद् (for चै°). B1 सदाचरेत् (for समा°). — [c]) Da1 परः; D5 परं (for पर-). K5 B4 Da Dn1.n3 D2.3.8 -प्रयुक्तेन; B1 °क्तं न; D7 T1 G1.2.5 M1 °क्तस्तु (for °क्तं तु). K3 D4.9 परं; B4 D5 lacuna; M4 कथा (sic) (for कथं). K3.5 B1.4 D (except D1; Dn2 D6 absent) S (G3.4 absent) वि(M2 हि)भावयेद्; B3 विभीष° (for निशाम°). V1 परप्रयुक्तस्य विभावयेदतो; Bo.2m.3.5 पर(Bo.3 °रं)प्रयुक्तं तु निशामयेदतो. — [d]) V1 Bo D5 यतो (for अतो). M2 यथोक्तं (for मयोक्तं). Ś1 K1 D1 भवते; G2 भवता (for °तो). Dn3 यथार्थिनः (for हितार्थिना).

70 Before 70, D7 T1 G1.2.5 ins. भीष्मः. M3 om. 70[a]. — [a]) K1 तथावद्. K3 D4.9 शुभं हितं; K5 V1 B2 Da Dn1.n3 D2.3.8 M1.2.4 हितार्थिना; T1 G5 हितं तथा (for हितं तदा). — [b]) K1 D9 निशाम्य. B1 सुधीर-; Da D3 सुखी स (for सुवीर-). K3.5 V1 B Dn1.n3 D2.3.5.7-9 S (G3.4 absent) -राष्ट्रपः (for -राष्ट्रियः). — [d]) B2 तु (for च). D4 दीर्घां (for दीप्तां). B4 Da स पार्थिवः; D1 सबांधवं.

Colophon. — *Sub-parvan:* Ś1 K V1 B Da Dn1.n3 D1-5.8.9 आपद्धर्म; B2 (also) S (G3.4 absent) राजधर्म. — *Adhy. name:* Ś1 K1.2.4 कणिकानुशिष्टिः; K3 कर्णिकषष्टिकं; K5 Dn1.n3 D2.3.8 कर्णिकोपदेशः; V1 कालकेयष्टिः; Bo कालिकयष्टिः; B1.5 कणिकषष्टिः; B2.4 कालकयष्टिकं; B3 कालकभाषितं; Da कणिककृतिः; D1 कनिकानुशिष्टिः; D4 कर्णिकषष्टिः; D9 कर्णिकोपदेशः; M1-3 कर्णिकशत्रुंतपसंवादः. — *Adhy. no.* (figures, words or both): B1 130; B2.4 T2 141; B3 139; Dn1 10; D3 8; T1 G5 143; G1.2 M 142. — *Śloka no.:* Da Dn3 70; Dn1 71; D3 69.

## 139

1 [a]) D9 परमिके. — [b]) D5 (by corr. *sec. m.* as in text) सर्वे (for सर्व-). K5 V1 B Da Dn1.n3 D2.3.5.8 -लोकाभि-; D4 -लोकेति-; D7 T G1.5 M -लोका(T2 G1 °क)वि-; G2 -लोकाव- (for -लोकाति-). K3.5 Dn1.n3 D2-4.7.8 S (G3.4 absent) -लंघि(G2

C. 12. 5320
B. 12. 141. 2
K. 12. 141. 2

राजभिः पीडिते लोके चोरैर्वापि विशां पते ॥ २
सर्वाश्रमेषु मूढेषु कर्मस्रूपहतेषु च ।
कामान्मोहाच्च लोभाच्च भयं पश्यत्सु भारत ॥ ३
अविश्वस्तेषु सर्वेषु नित्यभीतेषु पार्थिव ।
निकृत्या हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ४
संप्रदीप्तेषु देशेषु ब्राह्मण्ये चाभिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ ५
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ।
केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥ ६
अतितिक्षुः पुत्रपौत्राननुक्रोशान्नराधिप ।
कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ॥ ७
कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परंतप ॥ ८

भीष्म उवाच ।

राजमूला महाराज योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥ ९
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजमूलानि सर्वाणि मम नास्त्यत्र संशयः ॥ १०

°वि )ते ; B Da D5 -संहिते (for -लङ्घिनि). — d) M2 वा (for च).

2 D8 om. 2ab. — a) K5 Dn1. n8 D2. 3. 8 विनष्टासु ; V1 B1. 2 Da प्रनष्टासु (for प्रभिन्नासु). — b) Ś1 (by corr.) D4 क्षुधिते. S (G3. 4 absent) लोक- (for धर्म-). — d) Ś1 K1-4 V1 B Da D1. 4. 5. 9 चौरैर् ; K5 Dn1. n8 D2. 3. 8 परैर् (for चोरैर्). B3. 4 D5 अपि ; D7 T1 G2. 5 M चापि (for वापि).

3 a) K2. 8 B1 Dn1 D3. 5 सर्वाश्रयेषु (for °श्रमेषु). — b) Bo. 3. 5 D5 कलुषोप- ; Da कर्मरूप- (for °सूप-). D7 T1 G2. 5 -गतेषु (for -हतेषु). — c) Da कामा (for कामान्). K1 मोहाश्च लोभाश्च ; K3. 5 V1 B Da Dn1. n8 D2. 3. 5. 7-9 T1 G1. 2. 5 M लोभाच्च मोहाच्च (by transp.) ; T2 लोभाश्च मोहाश्च.

4 b) Ś1 K3. 5 V1 B3-5 D (except D1. 9 ; Dn2 D6 absent) T G2. 5 M4 नित्यं (for नित्य-). Bo. 3-5 D5. 7 T1 G2. 5 भूतेषु (for -भीतेषु). Da पार्थिवाः (Da1 °वा) ; D1. 7 T G1. 2. 5 भारत ; M सर्वतः (for पार्थिव). — c) D4 अकृत्वा ; D7 S (G3. 4 absent) नित्यं च (for निकृत्या).

5 a) D7 T1 G1. 2. 5 M प्रदीप्तेषु च ; T2 अप्रदीप्तेषु (for संप्र°). D2 lacuna ; D7 G2 सर्वेषु (for देशेषु). — b) K2. 4. 5 V1 B Da Dn8 D2. 3. 5. 8 ब्राह्मणे. K3 V1 Da D9 T1 G5 M1. 8 चापि ; K5 Bo. 1. 5 Dn8 D2. 3. 5. 8 चाति- ; Dn1 वाति- ; T2 G1 वापि (for चाभि-). — c) K4 पर्वण्ये (sic) (for पर्जन्ये). K3 V1 Bo. 3-5 D5 अप्रवर्षति पर्जन्ये. — d) K4 मिथो ; D9 मिथ्यो (for मिथो). — After 5, D8 reads for the first time 14c-16d, repeating it in its proper place.

6 D8 om. 6a-8c. — c) B1 D5 M4 -चिद् (for स्विद्). — d) B1 Dn8 जघन्य- (for जघन्ये).

7 D8 om. 7 (cf. v. l. 6). — a) Ś1 K2. 4. 5 Bo-3. 4. 5 (marg. as in text) Da Dn1. n8 D1-3. 5 G1 Ca अतिति( Ś1 °त्यि )क्षुः ; D4 असंत्यजन् ; T2 अवत्यक्षुः ; M4 अमि° (for अति°). M1. 8 -पौत्रम् (for -पौत्रान्). Ś1 K2. 4 D1 om. from नराधिप up to ब्रूहि (in 7d). — b) Da2 Dn8 नराधिपः. — c) K1 Bo. 3-5 D4. 5. 7. 9 S (G3. 4 absent) आपदि (for आपत्सु). — Dn8 D2. 3. 5 om. (hapl.) 7d-8a.

8 D8 om. 8abc (cf. v. l. 6) ; Dn8 D2. 3. 5 om. 8a (cf. v. l. 7) ; Ś1 K2. 4 D1 om. 8. — a) K8 हि (for च). D4 कथं नु राजतो वर्तेत्. — b) B5 धर्मे (for लोके). — c) K1 T2 कथमर्थश्च धर्म( T2 °र्थाश्च धर्मा )श्च. — d) D5 हीयेच्च (for °त). K8 D9 नराधिप ; M2 परंतपः (for °तप). D8 किंचिद्धीयेत्परंतप.

9 a) K5 Dn1. n8 D2. 3. 8 महाबाहो (for °राज). — b) K1. 8 Da2 D7. 9 S (except M2 ; G3. 4 absent) योगक्षेमाः (Da2 °मः) (for °क्षेम-). D5 -समुद्भवः (for -सुवृष्टयः). — c) T2 G1 प्रजाश्च ; G2 प्रजास्युर् (for प्रजासु).

10 a) T2 G1. 2 कृत- (for कृतं). All MSS. (except Ś1 K1. 2. 4 ; Dn2 D6 G3. 4 absent) द्वापरं (for °रश्). — b) T2 G1 मनुजर्षभ (for भरत°). D1 कलिर्भरतसत्तम. — c) K5 V1 B1. 2 Da Dn1. n8 D2-4. 7. 8 S (G3. 4 absent) राजमूला इति म( Dn1. n8 D8 ग )तिर्.

11 D5 om. 11. — a) Da D4 T2 G1 अभ्यागते (for स्वभ्या°). Da2 राजा (for काले). — b) D4

तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं तदा भवेत् ॥ ११
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ १२
त्रेताद्वापरयोः संधौ पुरा दैवविधिक्रमात् ।
अनावृष्टिरभूद्घोरा राजन्द्वादशवार्षिकी ॥ १३
प्रजानामभिवृद्धानां युगान्ते पर्युपस्थिते ।
त्रेतानिर्मोक्षसमये द्वापरप्रतिपादने ॥ १४
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥ १५
नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।
नद्यः संक्षिप्ततोयौघाः क्वचिदन्तर्गताभवन् ॥ १६
सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विट्कान्यलक्ष्यन्त निसर्गाद्दैवकारितात् ॥ १७
उपशुष्कजलस्थाया विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ १८
उत्सन्नकृषिगोरक्ष्या निवृत्तविपणापणा ।
निवृत्तपूगसमया संप्रनष्टमहोत्सवा ॥ १९

C. 12. 5337
B. 12. 141. 19
K. 12. 141. 19

दुःख- (for दोष-). Ś1 K1.2.4 Bo.3–5 D1 -कारिते (for -कारके). — [c]) B1 विज्ञानं; G2 विज्ञाय (for विज्ञान-). T2 G1 आश्रित्य (for आस्थाय). — [d]) D4 वर्ति**; D9 यापितव्यं (for जीवि°). K5 V1 B1.2 Da Dn1.n3 D1–3.8 M4 भवेत्तदा (by transp.); D9 T2 G1 M2 यथा (D9 °दा) भवेत्; M1.3 विवस्मैना.

12 [d]) Some MSS. चांडाल (T2 G1 °ळ) स्य (for चण्डा°). Some MSS. पक्कणे.

13 [b]) V1 Da Dn1.n3 D2.3.8 तदा; B4 damaged; T2 G1 राज- (for पुरा). B4 damaged; Dn1.n3 D2.4 G2 देव- (for दैव-). D7 S (G3.4 absent) -व्यतिक्रमात् (for -विधि°). — [d]) K1 पुरा; K3.5 V1 B D (except D1; Dn2 D6 absent) S (G3.4 absent) लोके (for राजन्).

14 [a]) D4 प्राज्ञानाम् (for प्रजा°). Ś1 K2.4.5 V1 B D (except D4.7; Dn2 D6 absent) अति-; M2 अपि (for अभि-). — [b]) K3.5 Dn1.n3 D1–4.8.9 T2 G1 समुपस्थिते; V1 B1.2 Da D5 प्रत्युप°; G2 पर्यंव° (for पर्युप°). — For the repetition in D8, cf. v. l. 5. — [c]) K2–5 Da Dn1.n3 D2–4.8 (both times) -विमोक्ष- (for -निर्मोक्ष-). D7 S (G3.4 absent) त्रेताया (G1 M2.3 °यां) मोक्षसमये.

15 For the repetition in D8, cf. v. l. 5. — [a]) B1 सहस्राख्यं; G1 °स्राक्षं (for °स्राक्षः). — [b]) K1 प्रतिलोमा; K2 °लोभो; K4 °लेमे (sic); D5 °सोमो (for °लोमो). Ś1 (*sup. lin. sec. m.*) K1 D4.9 भृगुः; K2 D1 भुवः; K4 भवः (for गुरुः). — [c]) B4 मार्गः. — [d]) K3 D4 दक्षिण- (for व्यावृत्त-). D7 S (G3.4 absent) -मंडलः (for -लक्षणः).

16 For the repetition in D8, cf. v. l. 5. — [a]) K5 Dn1.n3 D3 (*inf. lin.*; *sec. m.* as in text). 8 (second time) तत्राभूत् (for रात्र्यन्ते). K3 D4 नावस्यायोत्रनीहारः (sic). — [b]) K1 V1 Bo.5 M2 [अ]भ्र (for [अ]भ्र-). K5 Dn1.n3 D2.3.5.8 (both times). 9 -जातयः (for -राजयः). — [c]) D1.4 नद्याः. D4 G2 -तोयोघाः (for -तोयौघाः). — [d]) K5 B4 Dn1.n3 D2.3.8 M1 किंचिद् (for क्व°). B2 अंतं (for अन्तर्-). Ś1 K1.2.4 Bo.3–5 D1.5.9 तदा; K5 Dn1.n3 D2.3.8 ततः; D7 भवेत् (for [अ]भवन्).

17 [b]) D5 कूप- (for कूपाः). Bo Da2 D4.9 प्रश्रवणानि. — [c]) K3 हत्वा त्विड्कानि; K4 D1 हतत्वि (D1 °ड्रि)-कानि; D4 हक्षद्विङ्कानि; T2 G1 गतोदकानि (for हतत्विङ्कानि). K3 V1 B3.5 D4.9 [अ]लक्षंत; D5 लक्ष्यंते; D7 T1 G2.5 [अ]दृश्यंत; M1–3 [अ]चक्ष्यंत (for [अ]ल°). K1 हतार्किकण्यलक्षंति (sic); K5 Dn3 D3.3.8 हतत्विषो न लक्ष्यंते. — [d]) K4 D1.2 देव-; D7 S (G3.4 absent) पूर्व- (for दैव-). K1 m.2 -कारितं (for °तात्).

18 [a]) D5 ततः; D7 S (G3.4 absent) भूमिः (for उप-). Ś1 K1.4 D1.7 -स्थाना; K3 V1 Da Dn3 D3 (by corr.).4.5.9 -च्छाया (for -स्थाया). ❀ Cn : जलस्थायाः क्षुद्रजलाशयाः । ❀ — [b]) D2.3 विनिवृत्ता (for °वृत्त-). K1 -सम-; G1 -सहा- (sic); D8 -समा- (for (for -सभा-). Da1 -प्रजा; Da2 -प्रभाः; G2 M2 -प्रभा (for -प्रपा). — [c]) Da2 -यज्ञः. B2 Da1 -स्वाध्यायो; D1 स्वाक्या वा (for -स्वाध्याया-). — [d]) K1 निर्वषंकार-; D1 निर्वषंकार-; G1 निर्विषट्कार-; M2 निष्ठष° (for निर्वष°).

19 [a]) K3 V1 Bo.5 Dn1.n3 D2–4.8 उच्छिन्न-; B2–4 Da D5.9 उच्छन्न- (for उत्सन्न-). K4 -कृष्य- (for

C. 12. 5338
B. 12. 141. 20
K. 12. 141. 20

अस्थिकङ्कालसंकीर्णा हाहाभूतजनाकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ २०
क्वचिच्चोरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥ २१
गतदैवतसंकल्पा वृद्धबालविनाकृता ।
गोजाविमहिषैर्हीना परस्परहराहरा ॥ २२
हतविप्रा हतारक्षा प्रनष्टौषधिसंचया ।
श्यावभूतनरप्राया बभूव वसुधा तदा ॥ २३
तस्मिन्प्रतिभये काले क्षीणे धर्मे युधिष्ठिर ।
बभ्रमुः क्षुधिता मर्त्याः खादन्तः स्म परस्परम् ॥ २४
ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदैवताः ।
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ॥ २५

---

-कृषि- ). K ( except K2 ) B4. 5 D ( except Da ; Dn2 D6 absent ) T G1. 2. 5 M2 -गोरक्षा ; B3 -गौरक्ष्या ( for -गो° ). — [c]) D7 निर्वृत्त- ( for °वृत्त- ). K1 -मूल- ; K3. 5 Dn1. n3 D2. 3. 8 -यूप- ; B1 Da D1 -युग- ; G1 -पूर्व- ( for -पूग- ). K3 B1 -संमाना ; K5 Dn1. n3 D2. 3. 8 -संभारा ; V1 -संलापा ; B2 Da -संपन्ना ( for -समया ). — [d]) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 वि- ( for सं- ). Ś1 K2. 4 D1. 9 T2 G1. 2 -प्रणष्ट- ( for °नष्ट- ). B2 Da -महोरगा ( for °त्सवा ).

20 [a]) K3 -वांशाल- ( sic ); K5 V1 B0–3 Dn1. n3 D2. 3. 8 -संचय- ; B4. 5 D5 -संकुल- ; S ( G3. 4 absent ) -कंकाल- ( for -कङ्काल- ). — B1 om. 20[b]–23[a]. — [b]) K3. 5 Dn1. n3 D1–3. 8 महा- ( for हाहा- ). K3 D7. 9 S ( G3. 4 absent ) -नराकुला ; K5 V1 B ( B1 om. ) Dn1. n3 D2. 3. 5. 8 -रवा° ; Da -चरा° ; D4 -समा° ( for -जना° ). — [c]) M1 शून्या ( for शून्य- ). K3 -नगराद्.

21 B1 om. 21 ( cf. v. l. 20 ). — [a]) K3 B4 Da2 Dn1 D8 घोरैः ; K5 V1 B2. 3. 5 Da1 D1. 4. 8 चौरैः ; M2 चारैः ( for चोरैः ). D7 S ( G3. 4 absent ) शूरैः ( for शस्त्रैः ). — [b]) M1. 3. 4 आतुरा. — [c]) V1 -वधाच् ; T2 -भयाश् ; M1. 3 -भया ( for -भयाच् ). — [d]) Da2 M2 -निर्जनाः ; D5 -निर्जने ; T2 G1 -निर्गमा ( G1 °मः ) ( for °र्जना ).

22 B1 om. 22 ( cf. v. l. 20 ). — [a]) B0. 5 हत- ; T2 G1 एवं ( for गत- ). G1. 2 -देवत- ( for -दैवत- ). K3. 5 V1 B ( B1 om. ) Da Dn1. n3 D2. 3. 5. 8 -संस्थाना ; D7 S ( G3. 4 absent ) -संयोगा ( T2 G1 °गाद् ) ( for -संकल्पा ). D4 तदेवं गतं कल्पा ( corrupt ). — [b]) D1 वृद्धा ( for वृद्ध- ). K5 Dn1. n3 D2. 3. 8 -लोक- ; Da -बाला ( Da2 °लः ) ( for -बाल- ). K5 B2 Da Dn1. n3 D2. 3. 8 -निराकृता ; B0. 5 ( marg. as in text ) -निषेविता ( for -विनाकृता ). — [c]) Ś1 K1 D1 M4 गजावि- ; Da2 गोजीवि- ( for गोजावि- ). K5 Dn1. n3 D1–4. 8. 9 -महिषी- ; Da -सहि( Da2 °हैं )वैर् ( for -महिषैर् ). B3. 4 दीना ( for हीना ). — [d]) K1 D1. 4 -हराहता ; K3 -हरापरा ; K5 Da Dn1. n3 D2. 3. 5. 7. 8 T1 G2. 5 -पराहता ; B3. 5 -हराहराः ; B4 -हराह* ; T2 G1 -हताहता ( for -हराहरा ).

23 B1 om. 23[a] ( cf. v. l. 20 ). — [a]) K1 B4 D4 om. हत. Ś1 K1–3 V1 B2–5 Da D1. 4. 5. 9 G1 M -विप्र- ( for -विप्रा ). Ś1 K1. 2. 4 D1 -व( K1 -ह )रारक्षा ; K3 D9 -हतारक्ष्या ; V1 B2 Da -हताकीर्णा ( for -हतारक्षा ). B0 हतरक्षहताविप्रा. ❀ Cn : हता आरक्षा रक्षाकर्तारो यस्याम् । ❀ — [b]) Ś1 K2 Da1 D1. 9 प्रणष्टौषधि- ; K1 प्रक्षाष्टौ° ( sic ); Da2 प्रसादौ° ; D7 S ( G3. 4 absent ) प्रन( T2 G1. 2 °ण )ष्टोत्सव- ( for °ष्टौषधि- ). D4 reads from संचया up to धर्मे ( in 24[b] ) twice. — [c]) Ś1 ( *sup. lin.* ) सर्वभूत- ( for श्याव° ). B5 ( marg. ) -रवप्राया ; Da2 -परप्राया ( for -नरप्राया ). Ś1 K1. 2. 4 D1 व्यावर्तत नव( K1 °द्ध )प्राया ; K5 B0. 3. 4 Dn1. n3 D2. 3. 5. 8 Cn सर्व( D2. 3 Cnp °र्वा )भूतनर( K5 B0 D3 °रव- ; B3 D2 °वर- ; B4 Dn1 D3 Cn °तरु- ; D5 °वध )प्राया ; V1 B1. 2. 5 D7. 9 T G1. 2. 5 Ca. np श्व( D9 Ca. np शा )वभूतनर( B5 °रव )प्राया. ❀ Ca : शावः कृष्णवर्णः । ❀ — [d]) K1 *सुधा ; K3 च सुधा ( for वसुधा ).

24 [a]) K3 D1. 4 अस्मिन् ; D9 तत्र ( for तस्मिन् ). D5 -हते ( for -भये ). Da घोरे ( for काले ). — [b]) K4 D4. 7 T1 G2 M1 क्षीण- ; K5 B4 Dn1. n3 D3. 8 क्षते ( for क्षीणे ). — [c]) D7. 8 T G5 बभूवुः ( for बभ्रमुः ). K3 D9 दुःखिता ; D4 तृर्षिता ( sic ) ( for क्षुधिता ). D7 T G1. 5 M पुंसः ( for मर्त्याः ). — [d]) K1 ( before corr. as in text ) खादंतश्च ; K3. 5 V1 B1. 2 Da Dn1. n3 D2. 4. 7–9 S ( G3. 4 absent ) खादमानाः ; B0. 3–5 °यंतः ( for °न्तः स्म ).

25 V1 reads 25–29 on marg. — [b]) K2. 3. 5 V1 B Da Dn1. n3 D2. 3. 8 M2 परित्यज्याग्नि- ; M1. 3 °त्यक्ताधि- ( for °त्यक्ताग्नि- ). All MSS. ( except Ś1 M1. 3 ; Dn2 D6 G3. 4 absent ) -देवताः ( for -दैवताः ). — [c]) B0. 3–5 D5 आश्रमं ( for °मान् ). — [d]) Da परिधा-

विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः ।
क्षुधा परिगतो धीमान्समन्तात्पर्यधावत ॥ २६
स कदाचित्परिपतञ्श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिहन्तॄणामाससाद वने क्वचित् ॥ २७
विभिन्नकलशाकीर्णं श्वचर्माच्छादनायुतम् ।
वराहखरभग्नास्थिकपालघटसंकुलम् ॥ २८
मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमठम् ॥ २९
उलूकपक्षध्वजिभिर्देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥ ३०
तत्प्रविश्य क्षुधाविष्टो गाधेः पुत्रो महानृषिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ ३१
न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः ।
मांसमन्नं मूलफलमन्यद्वा तत्र किंचन ॥ ३२

C. 12. 5352
B. 12. 141. 34
K. 12. 141. 34

वन्; D4 T2 G1 संप्र° (for पर्य°).

26 V1 reads 26 on marg. —a) D7 T1 G2.5 [ऽ]पि (for ऽथ). —c) Da2 क्षुधां (for क्षुधा). T2 भीमान् (for धी°). —After 26, K5 V1 B Da Dn1.n3 D2.3.5.8 ins.:

348* त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्चिज्जनसंसदि ।
भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ।

[(L. 1) K5 Dn3 D2.3.5.8 कस्मिंश्च (for °श्चिज्). —(L. 2) B1 om. भक्ष्या. V1 B (except B1) भक्ष्याभक्ष्याशनो.]

27 V1 reads 27 on marg. D3 om. 27ab. —a) Ś1 D1 पर्यपतञ्. —b) Ś1 स्वपमानं; K1.3 स्वपचानां (for श्वप°). D7 T G1.2.5 M2 निकेतनं (for °वेशनम्). —K1 om. 27c-28d. —c) B2 Da D4 प्राण-; M4 पाणि- (for प्राणि-). K3 D5 -हंत्रीणाम्; K5 Da Dn1 D2.3.7.8 T1 G1.2.5 M3.4 -घातानाम्; B1.2 Dn3 D4 -घाती(Dn3 °ति)नाम्; D1 -हंत्राणाम्; T2 -भूतानाम्; M2 -जातानाम् (for -हन्तॄणाम्). K4 corrupt. V1 B0.3-5 D5 हिंस्राणामवसन्नानाम्. —d) K3 D1.4 वनं.

28 K1 om. 28 (cf. v. l. 27). V1 reads 28 on marg. —a) V1 B0.3.5 Da D5 -कलशा(B0 °सा-; Da2 °श)स्तीर्णं; B2 °साकीर्णं; B4 damaged (for °शाकीर्णं). —b) B4 partly damaged. K3.5 V1 B Da Dn1.n3 D2-5.8 श्वचर्मच्छे(K3 °वर्मच्छे-; B1.2 °चर्मच्छा-; D4 °चर्मच्छं)दनायुतं; D7 S (G3.4 absent) श्वमांसेन च (T2 M वि-) भूषितं. —c) G2 वाराहि- (for वराह-). Da D5 -खुर-; T2 -करि-; G2 -कर- (for -खर-). D2.8 -संगास्थि-; T2 G1 -भिन्नास्थि- (T2 °स्ति) (for -भग्नास्थि-). —d) T2 G1 -प(G1 -व)द्-घट-). Ś1 K2.4 D1 -संयुतं (Ś1 D1 °लं) (for °कुलम्).

29 V1 reads 29 on marg. —a) K Da Dn1.n3 D2.4.8.9 -चैल- (for -चेल-). —b) K4 -हृत-; G2 -क्षत- (for -कृत-). Cv निर्मलं (gloss: नितरां मलं यस्मिन्) कृत्तिभूषणं. —d) K1 M1 -चिह्नं; T2 -द्विज-; M2 -विघ्न- (for -चिह्न-). K1 -कुजी- (for -कुटी-). K5 D7.9 T1 G1.2.5 -मुखं (G2 °कं); T2 -द्रुमं (for -मठम्). —After 29, K5 V1 (marg.) B Da Dn1.n3 D2.3.5.8 ins.:

349* कुक्कुटारावबहुलं गर्दभध्वनिनादितम् ।
तद्योषिद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम् ।

[(L. 1) Da कुकुराराव- (for कुक्कुटा°). D5 कुक्कुटारवलग्नानां (for the prior half). B2 Da रासभ- (for गर्दभ-). Da -स्वन- (for -ध्वनि-). —(L. 2) K5 Dn1.n3 D2.3.8 उद्घोषद्भिः (for तद्योषिद्भिः). Da1 खरं (for खरैर्).]

30 a) K5 B1.4 Da Dn1 D2.3.5.8 M2 -पक्षि- (for -पक्ष-). Dn3 D2-4 -ध्वनिभिर्; M2 -ध्व*भिर् (for -ध्वजि°). —c) M3 लोक- (for लोह-). T2 -होम-; G1 -कंठा- (for -घण्टा-). K3.5 Da Dn1 D2.4.8.9 -परिस्कारं (K3 D4.9 °रैः); T2 °ष्काय- (sic) (for °ष्कारं). —d) Ś1 K1 श्वजूथ- (Ś1 °जूट-); K3 श्वयूथं; Da श्व(Da2 स्व)मुखैः; D4.9 श्वयूथैः; M2 स्वयूथ- (for श्व°).

31 a) D4 प्रविष्टः. —b) K3 V1 B1 Da D4.7.9 S (G3.4 absent) गाधि(M2 °धी-; M3.4 °धि)पुत्रो; K5 B4 Dn1.n3 D2.3.8 विश्वामित्रो (for गाधेः पुत्रो). —c) Da2 आहारान्वेषणे. D7 T2 G1 यत्तः (for युक्तः).

32 a) V1 Da किंचिद् (for क्व°). B1 अविंदं स; D9 असौ विंदद्; M2 अविंदेत (for अविन्दत्स). K3 D4 न कश्चिदाससादाथ. —b) K3 D4 भिक्ष्यमाणो; D5 प्रेक्ष° (for भिक्ष°). M2 [ऽ]थ (for ऽपि). —K2-4 D1 om. (hapl.) 32c-33b; Ś1 reads it on marg.; while

C. 12. 5353
B. 12. 141. 35
K. 12. 141. 35

अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ॥ ३३
चिन्तयामास स मुनिः किं नु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥ ३४
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः ।
चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य च ॥ ३५
स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे ॥ ३६
आपत्सु विहितं स्तेयं विशिष्टसमहीनतः ।
परं परं भवेत्पूर्वमस्तेयमिति निश्चयः ॥ ३७
हीनादादेयमादौ स्यात्समानात्तदनन्तरम् ।
असंभवादाददीत विशिष्टादपि धार्मिकात् ॥ ३८
सोऽहमन्तावसानानां हरमाणः परिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्यामेतदामिषम् ॥ ३९

---

G1 reads it twice. — c) Dn1 M1 अन्न- (for अन्नं). K5 B1. 2. 4 Dn1. n8 D2. 3. 5. 7. 8 T1 G1 (both times). 3. 5 फलं मूलम् (for मूलफलम्). T2 मांसं न मूलं न फलम्. — d) T2 वात्र न (for वा तत्र).

33 K2–4 D1 om. 33ab, Ś1 reads it on marg. while G1 reads it twice (cf. v. l. 32). — a) T2 महत् (for मया). — c) V1 B2 Da भुवि (for भूमौ). — d) Some MSS. चांडाल- (for चण्डाल-). K3–5 Dn8 D2. 4. 8. 9 -पक्कणे; M2 -वर्तने (for -पक्कणे).

34 a) K3. 5 V1 B (except B3. 4) D (except D1. 5; Dn2 D6 absent) S (except T2; G3. 4 absent) स चिंतयामास मुनिः (D2. 3. 8 तदा). — b) Dn1 D8 किं तु; T1 G1 कर्तुर; M2 किं न (for किं नु). B2 कृतं (for भवेत्). — c) G1 प्रथा (sic); M4 वृता (for वृथा). D4 तु (for न). D9 कथं मे न वृथा मृत्युर्. — d) K3. 4 Da2 D9 -सत्तमः.

35 a) K3 D4. 9 ददर्श स (by transp.). — b) K2. 4. 5 V1 B Da Dn1. n8 D2–5. 7. 8 T1 G2. 5 M1. 3. 4 Cn कुतंत्रीं; K3 D9 °तंत्री; T2 G1 M2 °तंत्रिं (for °तन्त्रीं). D7 T1 G2. 5 पतितां; T2 G1 M2 विग°; M1. 3. 4 विवृ° (for वित°). ❀ Cn: कुतन्त्रीं दण्डिकाम्। Cv (reading कुतन्त्रिकततिं): मांसोद्वहनाय दार्वाविकृतकुतन्त्रमेव कुतन्त्रिकं, तस्य ततिं समूहम्। ❀ — c) Some MSS. चांडालस्य. — d) M2 शत्रु- (for शस्त्र-). K1 ह; K3. 5 V1 B (except B2) D (except Da D1; Dn2 D6 absent) S (G3. 4 absent) वै (for च).

36 a) K1 प्र- (for स). B2 D2. 3. 8 ततः (for तदा). — b) K3. 5 V1 B2 Da Dn1. n8 D2–4. 8. 9 स्तैन्यं; B1 स्तेनं (for स्तेयं). D5 इदं (for इतो). K3 यथा (for मया). — c) V1 B1 नेह (for न हि). D4 तावद् (for [इ]दानीम्). K5 Dn1. n8 D2. 3. 8 मे (for ऽन्यो).

37 a) K3 D4 कर्म; K5 V1 B1. 2 Da Dn1. n8 D2. 3. 8. 9 स्तैन्यं (for स्तेयं). — b) K4 V1 Da विशिष्टं (for °ष्ट-). K5 Dn1. n8 D2. 3. 8 विशिष्टं च महीयसः; B1 °ष्टं सुमहीनतः; Cv विशिष्टस्य निहीनतः. — c) Ś1 K1–4 D1 T2 G1 M परस्परं (for परं परं). K5 V1 B Da Dn1. n8 D2. 3. 5. 8 विप्रेण प्राणरक्षार्थम्; D7 T1 G2. 5 परस्यासंभवे पूर्वम्. — d) K3 B0. 3. 5 D4. 5. 7. 9 T1 G2. 5 M1. 3. 4 आस्थेयम्; K5 V1 B1. 2. 4 Da Dn1. n8 D2. 3. 8 कर्तव्यम्; M2 आसेयम् (for अस्ते°). M2 अपि (for इति). D9 G2 (also as in text) मे मतिः (for निश्चयः).

38 a) K1 हीनम् (for हीनाद्). D7 नादेयम्; M4 आने° (for आदे°). Ś1 K1. 2. 4 D1 आहुः स्यात्; D7 T1 G2. 5 M आदद्यात् (for आदौ स्यात्). G1 हीनादौ स्वयमादद्यात्. — b) D7 S (G3. 4 absent) समाद्वा (for समानात्). — c) K3. 5 V1 B1. 2. 4 D (except Da2 D1; Dn2 D6 absent) S (G3. 4 absent) असंभवे (for °भवाद्). K3 B1. 2 D4. 7 T G1. 2. 5 M1–3 स्वाददीत; K5 D3. 5. 8. 9 M4 चाद°; V1 B4 Da2 Dn1. n8 D2 वाद° (for आद°). B3 असद्वेत्ताददीत (submetric). — d) M3. 4 अति- (for अपि). V1 D5 धार्मिकः.

39 a) K1 अंतावमानानां; K2. 3. 5 V1 B0. 2. 5 Dn1 D2–4. 8. 9 अंत्यावसाया(V1 B2 Dn1 °यी)नां; B1 Da1 T2 G1 M अंतावसायीनां; B3. 4 D1. 5 अंत्या(D1. 5 °ता)वसन्नानां; Ca as in text. ❀ Ca: अन्तावसानानाम्, अन्त्यावसायिनाम्। Cv (reading अन्त्येत्यवस्थायां): अन्तस्य मरणस्य, इतिः प्राप्तिः । तस्यामवस्थायामित्यर्थः। ❀ — b) K2. 5 B4 Dn1. n8 D2. 3. 8 हराम्येनां; Da हीयमानः (for हरमाणः). K2. 3. 5 V1 B4 Dn1. n8 D2–4. 8 प्रतिग्रहात् (B4 °न्); B2. 3. 5 D9 T2 M2–4 परिग्रहान् (for °ग्रहात्). — c) K2. 3. 5 V1 B1. 2 Da Dn1. n8 D2–4. 8. 9 स्तैन्य- (for स्तेय-). D5 om. from यदोषं up to तस्मिन्दे (in 40c). — d) K2. 5 Dn1. n8 D2. 3. 8 श्वजाघनीं; V1 B0. 1. 4. 5 T2 G1 M1. 3. 4

एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः ।
तस्मिन्देशे प्रसुष्वाप पतितो यत्र भारत ॥ ४०
स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे ।
शनैरुत्थाय भगवान्प्रविवेश कुटीमठम् ॥ ४१
स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्ष उवाचाप्रियदर्शनः ॥ ४२
कः कुतन्त्रीं घट्टयति सुप्ते चण्डालपक्कणे ।
जागर्मि नावसुप्तोऽस्मि हतोऽसीति च दारुणः ॥ ४३
विश्वामित्रोऽहमित्येव सहसा तमुवाच सः ।
सहसाभ्यागतभयः सोद्वेगस्तेन कर्मणा ॥ ४४
चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसंभ्रान्त इयेषोत्पतितुं ततः ॥ ४५
स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम् ॥ ४६
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् ।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ४७

C. 12. 5368
B. 12. 141. 50
K. 12. 141. 50

---

तदामिषं·

40 D5 om. up to तस्मिन्दे (cf. v. l. 39). —[b]) Da D7 S (G3. 4 absent) महातपाः (for °मुनिः). —[c]) K5 V1 B1-3. 5 Dn1. n3 D2. 3. 5. 7. 8 T1 G2. 5 M स सुष्वाप; Da समुत्था( Da1 °च्छा )य; G1 सुसुस्वाप. —[d]) K5 Dn1. n3 D2. 3. 8 श्वपचो (for पतितो).

41 [a]) K3 D4 सुविगाढां; D4 परिगाढां (for स वि°). M2 विगाढां तां निशां दृष्ट्वा. —[b]) Ś1 K2. 4 D1 सुसत्र (for सुप्ते). Some MSS. चांडाल- (°ळ-) (for चण्डाल-). K3-5 Dn3 D2. 4. 8. 9 -पक्कणे; M2 -पत्रिणे (for -पक्कणे). —[d]) K3 D4. 9 कुटी( K3 °दी )रकं; K5 Bo. 5 Da2 Dn1. n3 D2. 3. 8 °मतः (Da2 °तं); B1 °मयं; D5 °मथ; D7 T G2. 5 °मुखं; G1 °गृहं (for °मठम्).

42 [a]) Ś1 K1-4 B4 D1. 4. 5. 9 प्रसु( D5 °सु )प्त (for स सुप्त). Ś1 K2. 4. 5 V1 B3. 5 Dn1. n3 D1-3. 5. 8 M4 इव; D7 T G2. 5 चापि (for एव). Some MSS. चांडालः (°ळः). —[b]) M2 श्लेष्माविहित-; M3. 4 श्लेषापि° (M4 °वि) (for श्लेष्मापि°). —[c]) Bo. 3-5 D5 परिपूर्ण-; M2 °हीन- (for °भिन्न-). Bo. 3. 5 -स्वनो; B4 damaged (for -स्वरो). D5 [s]न्वक्ष (for रूक्ष). —[d]) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 5. 7. 8 S (G3. 4 absent) प्रोवाच (for उवाच). K3 B4 G1. 2 M4 प्रियदर्शनः.

43 Before 43, N (except D7; Dn2 D6 absent) M ins. श्वपच उवाच. —[a]) K2. 3. 5 V1 B D (except D1; Dn2 D6 absent) T1 G2. 5 M1. 3. 4 कुतंत्रीं; K4 °तंतं; T2 °तर्त्रीं; G1 °तंत्रिं; M2 °तर्त्रीं (for °तन्त्रीं). K1. 4. 5 B1. 3. 4 Da Dn1. n3 D2-4. 7. 8 T G2. 5 M1. 2. 4 घटयति (for घट्ट°). —[b]) Some MSS. चांडाल- (ळ-) (for चण्डाल-). Some MSS. -पक्कणें (for -पक्कणे). —[c]) Ś1 K2. 4. D1 नार्थ-; K3. 5 Dn1. n3 D2. 3. 8 नात्र; V1 Bo. 2-5 Da D5 नैव; B1 न च (for नाव-). —[d]) Ś1 K3 D1 [s]स्मि (for ऽस्मि). Ś1 K1. 2. 4 D1. 4 सु- (for च). B (except B2) D5 दारुणं; M2 दारुणा.

44 [a]) K5 V1 B Da Dn1. n3 D2. 3. 5. 8 ततो भीतः; D9 [s]हमस्मीति (for ऽहमित्येव). M2 एष (for एव). —[b]) K1 सहस; D4 सहता (sic) (for सहसा). All MSS. (except Ś1 K1. 3 D1. 9; Dn2 D6 G3. 4 absent) ह (for सः). — Before 44[cd], Ś1 K1 ins. भीष्म उवाच. —[c]) K1. 2. 4 [अ]त्यागत-; D7 [अ]भ्यागतं; G1. 2 °गतो; G1 (by corr.) °तौ (for °गत-). D7 G1. 2 भूयः; M1. 3 -भयं (for -भयः). K5 V1 B Da Dn1. n3 D2. 3. 5. 8 स्तेय( K5 Dn1. n3 D2. 3. 8 तत्र )व्रीडाकुलमुखः. —[d]) T2 सोद्योगस् (for °द्वेगस्). — After 44, K5 V1 B Da Dn1. n3 D2. 3. 5. 8 ins.:

350* विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः ।
मा वधीर्मम सद्बुद्धेर्यदि सम्यक्प्रपश्यसि ।

[(L. 1) V1 B Da D5 गाधेः (Da °धि-) पुत्रो (for आगतोऽहं). Da2 बुभूषितः. — (L. 2) V1 B Da D5 मा मां (Da मा) वधीः श्वपच त्वं (B1 Da °चाथ); D5 मा वधीस्त्वं श्वपच (submetric) (for the prior half). Bo प्रशस्यसि; D2. 3. 8 प्रपत्स्यसि (for प्रपश्यसि).]

45 [a]) Some MSS. चांडाल( °ळ )स् (for चण्डा°). D7 T1 G2. 5 तु (for तद्). —[d]) K3 पतितुं; D1 G1 (by corr. as in text). 2 [उ]त्पतितं; D4. 9 [आ]पतितुं (for [उ]त्प°). D4. 9 तदा (for ततः). K5 Dn1. n3 D2. 3. 8 उद्ययौ प्रति (Dn3 मानिं-) तं ततः.

46 [a]) B1 D4. 9 विमृज्य (for °सृज्य). Ś1 K1. 3 D1 [अ]स्त्रु (K3 °स्तु) (for [अ]श्रु). Da निगृह्याश्रूणि नेत्राभ्यां. —[d]) T2 G1 नु (for ते).

47 [c]) D5 भवतो (for क्षुधितो). D7 T1 G2. 5 निर्गत-

C. 12. 5370
B. 12. 141. 52
K. 12. 141. 55

अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा ।
स्वधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ४८
अटन्भैक्षं न विन्दामि यदा युष्माकमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥ ४९
तृषितः कलुषं पाता नास्ति ह्रीरशनार्थिनः ।
क्षुद्धर्मं दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥ ५०

अग्निर्मुखं पुरोधाश्च देवानां शुचिपाद्विभुः ।
यथा स सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ॥ ५१
तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे ॥ ५२
मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्योरुजाघनी ॥ ५३

---

(for ऽहं गत-). Ś1 K2. 4 D1 परिश्रां( D1 °शां )तो (for गतप्राणो). K3 D4 T2 G1 M क्षुधितोंतर्गत°. — $^{d}$) Da2 च (for श्व-). T1 G1 -जावनिं; G2 -जंघनीं.

48 D3. 8 M2. 4 om. (hapl.) 48–49. K5 Dn1. n3 D2. 8 read 48 after 50. D4 repeats $48^{a}$ after 50; G1 after 351*. — $^{a}$) K4 G1 (first time) अवसीदति. — After $48^{a}$, K3 D4 G1 ins.:

351* तृषितः परमस्म्यहम् ।

— After the above, K3 reads $50^{cd}$ and D4 50, while G1 repeats $48^{a}$. K3 om. $48^{bcd}$. — $^{b}$) K5 B1. 3 Dn1. n3 D2 क्षुतिर् (for स्मृतिर्). D4. 9 नश्य-(D9 °स्य )ते (for °श्यति). G2 ध्रुवं (for क्षुधा). — After $48^{ab}$, K5 V1 B Da Dn1. n3 D2. 5 ins.:

352* दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः ।

[ Dn1. n3 भक्षाभक्ष- (for भक्ष्याभक्ष्य-). ]

— $^{c}$) K5 B Da Dn1. n3 D2. 4. 5. 7. 9 T G1. 3 M1. 3 सोधर्मं; G2 सो** (for स्वधर्मं). K4 बुद्धिमानोपि; Da2 बुध्यमानापि. — $^{d}$) T2 श्वजंघनीं; G1 °जावनिं.

49 D3. 8 M2. 4 om. 49 (cf. v. l. 48); D5. 9 om. (hapl.) 49; G1 om. (hapl.) 49–50. — $^{a}$) Bo. 3. 5 अन्यं; D7 T1 G2. 5 M1. 3 यदा; T2 यथा (for अटन्). K2. 4 B3. 5 भक्ष्यं; K5 V1 Bo. 2. 4 Dn1. n3 D1. 2 भैक्ष्यं (for भैक्षं). B (except B1) पश्यामि (for विन्दामि). K3 D4 अटन्न विंदामि यदा. — $^{b}$) K3 D4. 7 T G2. 3 M1. 3 युष्माकमह( K3 D4 °म )मालये. — B4 om. $49^{cd}$. — $^{c}$) K1 पाते (for पापे). — $^{d}$) T1 श्वजावनिं.

50 G1 om. 50 (cf. v. l. 49). D4 reads 50 after 351*. K3 om. $50^{ab}$. — $^{a}$) K5 V1 Dn1 D2. 3. 8 क्षुधितः; T2 तर्षितः (for तृषितः). D1 कलशं; T1 G5 कलुषः; T2 कलुषी (for कलुषं). K5 B1 Dn1. n3 D2. 3. 8 यातो; V1 Bo. 3. 5 D5 जातो; B2. 4 Da2 याता; D1 T1 पातान्; T2 पापो; M2 पानं; M4 पाका (sic) (for पाता). D4 कालुष्यं गतवानास्मि; D7 G2 तृषितः कलुषापातान्. — D9 reads $50^{b}$ on marg. — $^{b}$) D5 श्रीर्; D7 (marg. as in text) T1 G2. 5 भीर् (for ह्रीर्). — K3 reads $50^{cd}$ after 351*. — $^{c}$) K5 B Dn1. n3 D2. 3. 5. 8 च मां (for धर्मं). D7 T G2. 5 M नाशयति (for दूष°). D5 [अं]तं; M2 [अ]स्य (for [अ]त्र). V1 Da क्षुधा मे धर्षयत्यग्निः. — $^{d}$) T1 श्वजावनिं. — After 50, K5 Dn1. n3 D2. 9 read 48, while D4 repeats $48^{a}$.

51 $^{a}$) K3 D4 मुख्यः; D1 मुखे. K3 D4 वै; B2 Da तु (for च). — $^{b}$) M2 देवाश्च (for देवानां). K1 शुचिस्यद्धि नः (sic); K2 B1 Dn1. n3 D1. 2 °षद्विभुः; K4 °षद्विभुः; K5 M4 °या( M4 °वा )द्विभुः; D7 T G1. 2. 5 M2 °वाग्विभुः; D9 शुचि चास्य तत् (for शुचिपाद्विभुः). — $^{c}$) K3 D4. 7 S (G3. 4 absent) यथा ( T2 G1 °दा ) च; K5 B2. 4 Dn1. n3 D2. 3. 8 यथावत्; B1 स यथा (by transp.); D9 यथा तत्. — $^{d}$) G2 सर्वतः (for धर्मतः).

52 $^{a}$) D4 [अ]थ (for स). Some MSS. चांडालो (°ळो). — $^{c}$) K5 Dn1. n3 D2. 3. 8 तत्त्वं; Bo. 3. 5 D5 मम; B4 damaged; D9 तिष्ठ (for तथा). K5 Bo. 3–5 Dn1. n3 D2. 3. 5. 8 तथातिष्ठ; D1 समानुतिष्ठ (hypermetric); D9 समाचारे; T2 समं तिष्ठ (for समातिष्ठ). — $^{d}$) Da यदा (for यथा). K3 महीयसे; D5 T2 M2 न हीयते (for °यसे). K5 V1 B4 Da Dn1. n3 D2. 3. 8 यथा धर्मो न हीयते. — After 52, K5 B4 Dn1. n3 D2. 3. 8 T2 ins.:

353* धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम् ।

53 $^{a}$) Bo. 3–5 Dn1. n3 D5 शृगालाद् (for मृगाणाम्). — B3 om. $53^{c}$–$55^{d}$. — $^{c}$) K2. 4 D1 तथा (for तस्य). K3 [अ]धन; Da [अ]धर्मं; D1 धर्मं (for [अ]धम). D9 (*sup. lin.* as in text) उद्देश्यः. — $^{d}$) Da2 शरीरेस्य; T2 अधमश्च (for शरीरस्य). K5 B1. 2 Da2 Dn1 D2. 3. 5. 8 T2 M श्व-; V1 Bo. 4. 5 Dn3 [उ]त; Da1 स्व-; D7 T1 G1. 2. 5 तु (for [ऊ]रु).

नेदं सम्यग्व्यवसितं महर्षे कर्म वैकृतम् ।
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥ ५४
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥ ५५
जानतोऽविहितो मार्गो न कार्यो धर्मसंकरः ।
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ॥ ५६
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥ ५७
निराहारस्य सुमहान्मम कालोऽभिधावतः ।
न विद्यतेऽभ्युपायश्च कश्चिन्मे प्राणधारणे ॥ ५८
येन तेन विशेषेण कर्मणा येन केनचित् ।
अभ्युज्जीवेत्सीदमानः समर्थो धर्ममाचरेत् ॥ ५९
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भक्ष्यामि समयं क्षुधा ॥ ६०
यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया ।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥ ६१
सोऽहं जीवितमाकाङ्क्षन्नभक्षस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ६२

C. 12. 5384
B. 12. 141. 66
K. 12. 141. 66

---

Da D8 -जाघनीं; G1 -जाघनि. K8 D4 शरीराज्जाघनी स्मृता.

54 B8 om. 54 (cf. v. l. 53). — a) K2 D3. 8 व्यवहितं (for °सितं). — b) Ś1 K4 D1 G1 महर्षेः. K5 Dn1. n3 D2. 3. 8 धर्म- (for कर्म). K5 V1 B (B8 om.) Da Dn1. n3 D2. 3. 5. 8 -गर्हितं; D7 S (G3. 4 absent) वैदिकं (for वैकृतम्). — c) Some MSS. चांडाल(°ळ)स्वस्य. — d) K1. 3 Bo Da1 Dn3 D2. 4. 7 G1 M1. 2 अभक्षस्य; T2 भक्ष्यस्य च (for अभक्ष्यस्य).

55 B8 om. 55 (cf. v. l. 53). — a) B4 partly damaged. D5 साधो (for साधु). K1 (*sup. lin.*) अनुपश्यंस्; Bo. 5 उपपश्य (for अनु°). — c) D7 S (G3. 4 absent) स्व- (for न).

56 a) V1 B D7 S (G3. 4 absent) जानता. K3. 5 Da Dn1. n3 D2–4. 8. 9 जानता विहितं धर्मं (K3 D4 कर्मं; Da मार्गं). — b) Bo धन-; T2 वर्ण- (for धर्म-). Bo–2 -शंकरः. — c) V1 T2 G1 स्व-; B1 [मा]सु; B3 सु°; D5 श्व- (for स्म). K3 Da2 [अ]धर्मं. G1 परित्याक्षि (for °त्याक्षीस्). — d) K5 V1 B1. 2 Da Dn1. n3 D2. 3. 8 त्वं हि धर्मभृतां वरः.

57 b) Da2 M2 भरतर्षभः.

58 b) D5 om. from मम up to सम (in 59d). V1 महा- (for मम). Bo. 3. 4 M3. 4 विधाव(M3. 4 °वि)तः; B5 हि धा°; Da [ऽ]पि धा°; D1 [ऽ]भिभा°; D7 T1 G2. 5 व्यधावत; M1 [ऽ]भिधावितः (for °धावतः). — c) V1 B (except B2) D7 T2 G1. 2 M हि; Dn1 [ऽ]पि (for ऽभि-). M4 [ऽ]न्यः (for च). — d) D7 T1 G2. 5 मत् (for मे).

59 D5 om. up to सम (cf. v. l. 58). — a) D7 T1 G2. 5 M तेन (for येन). K4. 5 V1 B Da Dn1. n3 D2. 3. 8 येन; D9 T2 G1 केन (for तेन). Da2 om. from विशेषेण up to वेत् (in 59c). — b) D1 कर्मणां. — c) D7 S (G3. 4 absent) उज्जिहीर्षेत्; D9 अभ्युज्जिहीर्षेत् (hypermetric) (for अभ्युज्जीवेत्). K5 Da2 Dn1 D8 साद्यमानः; D2 सीद्य°; D3 सां(before corr. सं)द्य°; G1 सुदमनः (for सीदमानः). Dn3 अभ्यजीत्सिध्यद्यमानः (corrupt).

60 ab) D1 इंद्रो (for ऐन्द्रो). B2 (also as in text) Da द्विजातीनां क्षत्रियाणाम् (for क्षत्रियाणां ब्राह्मणानाम्). K3 D4 [आ]ह्निक (for [आ]ग्निकः). — c) D4 damaged. K1 -वह्ने (for -वह्निर्). T2 ब्राह्मणोहं वह्निरिव. — d) Ś1 K8 D1 भक्षामि; D9 मेत्स्यामि (for भक्ष्यामि). K3 D2. 4 शमयन् (for समयं). K4 D2 क्षुधां (for क्षुधा). K5 Dn1. n3 D3 भक्षामि शमयन्क्षुधां; V1 B Da D5 भक्ष्याम्येनां श्वजाघनीं; D7. 8 S (G3. 4 absent) भो(D8 भ)क्ष्यामि शमयन्क्षुधं (D7 T2 G1. 2 °धां; M2 °धा).

61 a) K3. 5 V1 Bo. 3–5 Dn1. n3 D2. 3. 5. 7–9 S (G3. 4 absent) यथैव; B1 D4 यथेव; B2 यथेह (for यथा वै). K3 V1 B1. 2 Da D4. 7 S (G3. 4 absent) जीवेत; Bo. 3–5 D5 जीवेद्वै (for °द्धि). — b) V1 B1. 2 Da कर्तव्यं तद् (by transp.). K3 D4. 7 S (G3. 4 absent) अलीलया; K5 V1 B1. 2 Dn1. n3 D2. 3. 8. 9 अहेलया; Da अहेतुना (for अपीडया). — d) Bo. 4 धर्मान्.

62 b) Ś1 Bo. 3–5 Da2 D5. 7 T G5 M4 अभक्ष्यस्य (for °क्षस्य). Bo. 4. 5 च (for [अ]पि). — c) Ś1 K1 व्यवसे. T2 G1 हि (for वै).

63 a) Bom. ed. बलवंतं करिष्यामि. — b) K1

C. 12. 5385
B. 12. 141. 67
K. 12. 141. 67

जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥ ६३

श्वपच उवाच ।

नैतत्स्वादन्प्राप्स्यसे प्राणमन्यं
नायुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु
श्वभक्षणे श्वा ह्यभक्षो द्विजानाम् ॥ ६४

विश्वामित्र उवाच ।

न दुर्भिक्षे सुलभं मांसमन्य-
च्छ्वपाक नान्नं न च मेऽस्ति वित्तम् ।
क्षुधार्तश्चाहमगतिर्निराशः
श्वमांसे चास्मिन्षड्रसान्साधु मन्ये ॥ ६५

श्वपच उवाच ।

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज ।
यदि शास्त्रं प्रमाणं ते माभक्ष्ये मानसं कृथाः ॥ ६६

विश्वामित्र उवाच ।

अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥ ६७

श्वपच उवाच ।

भिक्षामन्यामाहरेति न चैतत्कर्तुमर्हसि ।

---

B1-3 Dn1 D3 T2 G1 प्राणोत्स्यामि; D1. 4 प्रणेत्स्या( D4 °ष्या )मि; D5 प्रमोक्ष्यामि (for प्रणोत्स्यामि). K2. 4. 5 B Dn1. n3 D2. 3. 8 तु (for च). — d) D7 T G3. 5 ज्योतिषा (for ज्योतींषि). K1 D1 M तपः (for तमः). G1 ज्योतींषि महद्गुत्तमः.

64 B0 om. (hapl.) 64–65. — a) B1 नैतत्सुखान्; D7 T1 G2. 3 नैतं त्वदन् (for °तत्स्वादन्). V1 B (B0 om.) Da D5. 7 S (G3. 4 absent) प्राणमद्य; D9 दीर्घमायुर् (for प्राणमन्यं). K3. 5 Dn1. n3 D2–4. 8 नैतत्स्वादन्प्राप्सुते (K3 D4 °षे) दीर्घमायुर्. — b) K3. 5 Dn1. n3 D2–4. 8. 9 नैव (D9 नोत) प्राणान् (for नायुर्दीर्घं). K4. 5 B4. 5 Dn1. n3 D2. 3. 7. 8 T1 G3. 5 तृप्तीः; D5 वृष्टिं (for तृप्तिम्). — c) B2 अंत्यां (for अन्यां). D9 भिक्ष्य; T2 M1. 3 वीक्ष (for भिक्ष). D7 ममोस्तु; T1 G2. 5 M रुचि( M °चा )स्तु (for मनोऽस्तु). — d) M2 तु (for हि). K2. 4 V1 B2–5 D1. 3. 5. 7. 8 T1 G1. 5 M1. 3. 4 [अ]भक्ष्यो; Da [अ]भोज्या (for अभक्षो). D4. 9 श्वभक्षणं चाप्यभक्ष्यं द्विजानां.

65 B0 om. 65 (cf. v. l. 64). V1 reads 65–66 on marg. — a) T2 G1 अद्य (for अन्यच्). — b) K1 राणां (sic); K5 Dn1. n3 D2. 3. 8 G1 M मन्ये; V1 Da नान्यं; B (B0 om.) D5. 7 T2 G2 ना( D7 चा )न्यन् (for नान्नं). V1 B (B0 om.) Da D5 M1. 3 मम (for न च). V1 B1–4 Da D5 चास्ति; B5 M1. 3 नास्ति; G2 M4 (*sup. lin.* as in text) वेत्ति (for मेऽस्ति). — c) K1 D1 अगतिं; G1 अगमं (for अगतिर्). K1. 2. 4 D1 निषा( K1 °शा )द; D7 G1. 2 निशाचर; T2 M1–3 निशा च; M4 निशायां (for निराशः). — d) K1. 2. 4 D1 अस्मिन् (for चा°). B1 यत्र मां (for षड्रसान्). V1 B2 Da D5 पश्ये; B1. 3–5 पश्य (for मन्ये). D7 S (G3. 4 absent) श्वजाघनीं (G1 °निं) षड्रसां साधु मन्ये. —After 65, D7 reads for the first time, while T1 G5 read (marg. *sec. m.*) $69^{ab}$.

66 With $66^{ab}$, cf. Rām. 4. 17. $39^{ab}$; Gautama Dharma S. 17. 27. 31; Āpastamba Dharma S. 1. 5. 17. 35; Vasiṣṭha Dharma S. 14. 39–40; Manu. 5. 17–18; Yājñavalkya 1. 177; Viṣṇu Dharma S. 51. 6; Mārkaṇḍeya P. 35. 2–4; Mahāsutasomajātaka (No. 537), Gāthā 58. V1 reads 66 on marg. T1 G2. 5 repeat 66–67 after 71. B0 om. the ref. — a) D9 भिक्षा (for भक्ष्या). — b) Da भक्षदत्तस्य; D5 ब्रह्मक्षत्रेषु (for °क्षत्रस्य). K5 Dn1. n3 D2. 3. 8 वै विशः; V1 B Da D5 कौशिक (Da °कः); G2 चैव हि (for वै द्विज). — After $66^{ab}$, D7 ins. on marg. (*sec. m.*):

354* शल्यकः श्वाविधो गोधाः शशः कूर्मश्च पञ्चमः ।
[ Cf. Manu. 5. $18^{ab}$. ]

— c) K5 Dn1. n3 D2. 3. 8 यथा (for यदि). D9 हि (for ते). — d) K1. 3 B1 D4. 9 माभक्षे (for °भक्ष्ये). D7 S (G3. 4 absent) वै मनः (for मानसं).

67 For the incident, cf. 3. 103. For the repetition in T1 G2. 5, cf. v. l. 66. — a) D4 अगस्तेन. K1 M2 दग्धो; T1 G2. 5 भुक्तो (for जग्धो). — b) T2 G1 च (for वै). — c) K1 (by corr.) क्षुधा; K5 B3 Dn1 D2. 3. 8 क्षुत्तो; B4 damaged; D9 क्षुद्वान् (for क्षुब्धो). — d) T1 श्वजाघनिं; T2 °जाघिनीं; G1 स्वजावनीं.

न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ॥ ६८

विश्वामित्र उवाच ।

शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम् ॥ ६९

श्वपच उवाच ।

असता यत्समाचीर्णं न स धर्मः सनातनः ।
नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः ॥ ७०

विश्वामित्र उवाच ।

न पातकं नावमतमृषिः सन्कर्तुमर्हति ।
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी ॥ ७१

श्वपच उवाच ।

यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तच्च भक्ष्याधिकारम् ।
स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्हि स रक्षितव्यः ॥ ७२

विश्वामित्र उवाच ।

मित्रं च मे ब्राह्मणश्चायमात्मा
प्रियश्च मे पूज्यतमश्च लोके ।

C. 12. 5393
B. 12. 141. 77
K. 12. 141. 77

---

68 Ś1 K1.2.4 D1 om. (hapl.) 68–69. After the ref., B1 reads $69^{ab}$ for the first time, repeating it in its proper place. T1 G5 om. (hapl.) 68. — a) K3 भिक्ष्याम्. Da (Da2 also as in text) छित्त्वा भित्त्वा च कार्त्स्न्येन; D7 भिक्षामन्यांशये हंति (sic); D9 भिक्ष्यां मेध्यामाहरेति. — b) V1 B1.2 Da D5 T2 G1.2 M4 च तत् (for चैतत्). V1 D5 G2 इच्छसि (for अर्हं°). K5 Dn1. n3 D2.3.7.8 न च कर्तुमिहार्हसि. — c) D9 T2 G1 M नूनं न (T2 G1 तु) (by transp.); G2 कृतं न. T2 G1 [अ]कार्यम् (for कार्यम्). B3–5 D5 एतद्धि; Da एवैत(Da1 °न)द् (for एतद्वै). D4 न कार्यमेतद्वै कर्म. — d) K3 कर्म कामं; Da वरं कामं; G2 हरतेमां (for हर कामं). T2 श्वजाघिनीं; G1 °घनिं.

69 Ś1 K1.2.4 D1.8 om. (D8 hapl.) 69 (cf. v. l. 68); B1 reads $69^{ab}$ (for the first time) after the ref. in 68. D7 reads (for the first time) $69^{ab}$, while T1 G5 read the same after 65. — a) B1 (both times) नष्टा (for शिष्टा). D4 कारणे. — b) B1 (both times) D4 अनुवर्णये; D7 (first time) T1 G5 °वर्तय; M2 °वृत्तये (for °वर्तये). — c) T1 परा (for परां). K3 D4 T G1 M मेध्याशनाम् (for °शनाद्). K3 D4.9 हीमां; K5 Dn1. n3 एनां (for एतां). B2 परा मे व्यसनादेतां; G2.5 परां (G5 °रा) मेध्याशनेत्येतां. — d) B0 भक्ष्यास्म्येनां; Dn3 भक्षयिष्ये; D4.5 भिक्षां मन्ये (for भक्ष्यां मन्ये). T2 श्वजाघिनीं; G1 °घनिं.

70 a) B4 damaged. K2 B3.5 Da Dn3 असतां. K1 असतार्यं समादीर्वं (sic); D7 S (G3.4 absent) असद्भिर्यः समाचीर्णो. — b) B2.4 D8 च (for स). — c) B0.3.4 मा (for न). B1 वृत्तम् (for [अ]वृत्तम्). K3.5 Dn1. n3 D2.4.8 ना(Dn1 न; D4 अ)कार्यमिह कार्यं वै; D7 S (G3.4 absent) अका(G2 °ना)र्यमिह कार्यं वा. — d) K1.3.5 V1 B0.2.5 Da Dn1. n3 D2–5.7.9 S (G3.4 absent) [अ]शुभं (for [अ]नृतं). D7 कृथाः. B1 मा छलं मानृतं कृथाः; D1 मा छले वृत्तं कृथाः (submetric).

71 D7 om. 71. D9 om. the ref. — a) S (G3.4 absent) न (T2 ना-) पापकं (for न पातकं). K2 D4 नावमृतम्; M2 °तनम् (for °मतम्). — b) K1 ऋषेः; D4 ऋषिं (for ऋषिः). K2 V1 Dn1 D8 G1 M2 सत्कर्तुम्; B2 Da कर्तु तद् (for सन्कर्तुम्). K3 D4.9 अर्हसि. — c) B1 स; T2 स्व- (for श्व-). G2 -मृगं (for -मृगौ). — d) K3.5 B0.3–5 Da2 Dn1. n3 D2.3.8.9 भोक्ष्ये; V1 B2 D4 भक्ष्ये; B1 Da1 भक्षे; G1 भक्षा; M1.3 भक्ष्यां (for भक्ष्या). K3–5 V1 B Da Dn1. n3 D1–5.8.9 M1.3.4 श्वजाघनीं; T1 G1 °जाघनि; G2 °जाघिनी (for °जाघनी). — For the repetition of 66–67 in T1 G2.5, cf. v. l. 66.

72 D7 om. the ref. — a) T2 G1 तु समर्थितेन (for कृतम°). K3 यद्ब्राह्मणार्थंकृशतार्थं तेन (corrupt). — b) B1 om. (hapl.) तेन. K3 D4 महर्षिणा; D5 हितैषिणा; M4 तेनैषिणा (for तेनर्षिणा). K1 तदरक्ष्याधिकारं; K2.3.5 Dn1. n3 D2–5.8.9 तदवस्थाधिकारे (K2 °रं); V1 B तदर(B1 °वे)क्षाधिकारं; Da मम रक्षा(Da2 °क्ष्या)धिकारे; D1 तच्च भक्षाधिकारणं; D7 T1 G3.5 M1.3.4 तदभक्ष्यं न कामात्; T2 G1 भक्षितो वै न कामात् (for तच्च भक्ष्याधिकारम्). M2 **क्षीणास्तदरक्ष्या न कामं. — c) D7 T1 G2 M1.3.4 ह्यत्र (for यत्र). M4 तु (for न). M2 स वै न धर्मो न च पापमस्ति. — d) K3.5 Dn1. n3 D2–4.7–9 T G1.2.5 गुरवो हि रक्ष्याः (K3 °क्षाः); V1 B1.2 Da M गुरवोऽभि(B1 °ति)रक्ष्याः (B1 °क्षाः) (for हि स रक्षितव्यः).

